॥ श्रीः ॥

## सटीकतर्कभाषाया विज्ञापनम् ।

गोवर्धनमिश्रकृततर्कभाषाप्रकाशाख्यतर्कभाषाटीकायाम्
यत्तर्कभाषामनुभाषतेस्म गोवर्धनस्तर्ककथासु धीरः ॥
तेनानवद्येन सुधांशुगौरी कीर्तिर्गुरूणाममृताधिकास्तु ॥
विजयश्रीतनूजन्मा गोवर्धन इति श्रुतः ।
तर्कानुभाषां तनुते विविच्य गुरुनिर्मितिम् ।
श्रीविश्वनाथानुजपद्मनाभानुजो गरीयान् बलभद्रजन्मा ।
तनोति तर्कानधिगत्य सर्वान् श्रीपद्मनाभाद्विदुषो विनोदम् ॥

इति रामकृष्णगोपालभाण्डारकरमहाशयसङ्कलित १८८२-८३-ख्रीष्टाब्दीयरिपोर्ट् पुस्तके २१३पृष्ठे 'गुरुनिर्मितिं तर्कानुभाषां विविच्य तनुते' इतिलेखदर्शनेन गोवर्धनमिश्रः केशवमिश्रस्य शिष्य इति सिध्यति । बलभद्रजन्मेत्यनेन च बलभद्रोऽस्य गोवर्धनमिश्रस्य पितेति विजयश्रीतनूजन्मेत्यनेन च विजयश्रीर्गोवर्धनस्य मातेति चावगम्यते । विश्वनाथानुजपद्मनाभानुज इत्यनेन चास्य गोवर्धनस्य विश्वनाथपद्मनाभौ द्वौ ज्येष्ठभ्रातराविति निश्चीयते ।

पं० विन्ध्येश्वरीप्रसादद्विवेदिमुद्रितवाराणसीसंस्कृतसिरीजस्थसटीकप्रशस्तपादभाष्यभूमिकातो भाष्यटीकाकिरणावल्या एका पद्मनाभरचिता किरणावलीभास्करनामिका टीका वर्तत इति ज्ञायते । तत्पुस्तकं वाराणसीस्थसरस्वतीभवनपुस्तकाल[य]े वर्तते तत्र चायमारम्भश्लोकः ।

उपदिष्टा गुरुचरणैरस्पृष्टा वर्धमानेन ।
किरणावल्यामर्थास्तन्यन्ते पद्मनाभेन ॥

अन्ते च—

यस्तर्कदुस्तरतरार्णवकर्णधारो वेदान्तवर्त्मनिरतागमसार्थवाहः।
श्रीपद्मनाभरचितेन दिवाकरेण तुष्टोऽमुनास्तु सुकृती बलभद्रमिश्रः॥

इति श्रीबलभद्रमिश्रात्मजपद्मनाभविरचितः किरणावलीभास्करः समाप्तः। इति लिखितमस्ति। पिटर्सन्महाशयकृतरायल्एशियाटिक्सोसाइटीसम्बन्धि १८८४–८६ खीष्टाब्दीयवार्तापुस्तके २६१ पृष्ठे कणादरहस्यनामकटीकामधिकृत्यादौ—

जयति पुरनिहन्तुः सोमपङ्कपुष्पाणो-
ऽभिरथति पुनर्यानेककल्पद्रुमाणाम्।
युगपदसुरजानां तदद्रुहां त्रासहास्यौ
निरवधिगुणसीमा कोऽपि भीमा कटाक्षः॥

स्तम्बेरमाग्रणीयं भ्रमरकुलं दानपानरमणीयम्।
प्रद्योतनागवदनचलनवदनवदनं जयति॥

आरभ्यत प्रयत्नाद्यैरिहैकाशीतिकारिकाः।१
आचार्यपद्मनाभेन व्याख्या सम्प्रति तन्यते॥

अन्ते च—

न प्रार्थयामि भवतो दुर्जनाः प्रार्थये साधून्।
अङ्गीकृतमपि येषां शेषादिभिरप्यहो दूष्यम्॥१
यद्यदत्र विनिक्षिप्तं नव्यं सिद्धान्तवर्तिना।
पद्मनाभेन तैः प्रीतः प्रगल्भोऽस्तु गुरोर्गुरुः॥

इतिश्रीमन्मिश्रश्रीजगद्गुरुबलभद्रात्मजविश्वनाथानुजविजयश्रीगर्भसम्भवसकलशास्त्रारविन्दप्रद्योतनभट्टाचार्यमिश्रश्रीमत्पद्मनाभकृतौ स्वकृतराद्धान्तमुक्ताहारव्याख्याने कणादरहस्यं समाप्तमिति। [...]वं लिखितमस्ति। बलभद्रात्मजेत्यनेन विजयश्रीगर्भसम्भवेत्यनेन [वि]श्वनाथानुजेत्यनेन च गोवर्धनाग्रजन्मैव पद्मनाभः किरणावली[भा]स्करकणादरहस्ययोः कर्तेति नात्र विवादावकाशः। अस्पृष्टा वर्ध[मा]नेति किरणावलीभास्करस्थलेखदर्शनेन च गोवर्धनाग्रज-

द्मनाभस्य तत्त्वचिन्तामणिप्रणेतृगङ्गेशोपाध्यायात्मजवर्धमानोपा-
ध्यायादर्वाचीनत्वमिति स्पष्टत एवावगम्यते ।

रामकृष्णगोपालभाण्डारकरमहाशयसङ्कलित १८८२–८३ख्रीष्टा-
ब्दीयरिपोर्ट् पुस्तके चिन्नभट्टकृता तर्कभाषाप्रकाशिकाभिधा एका
टीका वर्तते । चिन्नभट्टस्तु सर्वज्ञसर्वज्ञस्य पुत्रः सर्वज्ञस्य भ्राता
विजयनगरस्य राज्ञो हरिहरोऽस्य सहायक आसीत् । स च चिन्न
भट्टः चतुर्दशशताब्दिशेषभागे आसीदिति लिखितम् । तर्कभा
टीकाकृच्चिन्नभट्टापेक्षया तर्कभाषाकृतः केशवमिश्रस्य प्राचीनत्वम
अल्पेनैव सिध्यति । एवं सति केशवमिश्रस्य तर्कभाषाटीकाकृद्
गोवर्धनगुरुत्वेन तत्समानकालत्वे सिद्धे गोवर्द्धनाग्रजपद्मना
च वर्धमानोपाध्यायानन्तरत्वे चिन्नभट्टस्य च चतुर्दशशताब्दि
षभागस्थितत्वे स्वीकृते केशवमिश्रस्य चतुर्दशशताब्दिशेषभाग-
पूर्वत्वं वर्धमानोपाध्यायानन्तरत्वं पद्मनाभादिसमानकालिकत्वं
च शक्यमवगन्तुम् ।

पिटर्सन्महाशयकृतालूवर्राजधानीस्थपुस्तकालयसूचीपु-
स्तके पद्मनाभकृतप्रशस्तपादभाष्यसेतुग्रन्थस्य—

स्मृतिपथमुपनीय श्रीमतस्तातपादात्
उचितमुपनिबद्धार्थं भाष्यमत्यादरेण ।
जयति विरचितोऽसौ पद्मनाभेन यत्ना-
दुदयनकृतिपारप्राप्तये सेतुरुच्चैः ॥

उदयनकृतिवल्लिकया वृद्धो भाष्याम्बुधिः परितः ।
बालानामपि सुगमस्तत्र मया रच्यते सेतुः ॥

अवशवशीकृतदुर्दमभूपतिर्निजभुजार्जितलोकसमुन्नतिः ।
अगतिकार्थिजनस्य परा गतिर्जयति वीरवरः पृथिवीपतिः ॥

भाष्याब्धेर्मिथितैतौ वीरवरीये यशोहेतौ ( यशोहेतौ ) ।
रचितो द्वितीयो भागो विदुषा श्रीपद्मनाभेन ॥

— श्रीपद्मनाभविदुषा पितुरुपदिष्टात् समाहृत

विषदीकृतः प्रयत्नात् कृतिषु विनोदाय गूढोऽर्थः ॥
भाष्याम्भोनिधिसेतौ वीरवरीये यशोह्लेलौ ( यशोहेलौ ) ।
चरमो लक्षणभागो रचितः श्रीपद्मनाभेन ॥
अमुनानृणीकृता वयमस्य वदान्याद्विशिष्टेन ।
प्रत्युपकारधियायं रचितो ग्रन्थस्ततोऽस्माभिः ॥

इतिलेखदर्शनात् पद्मनाभेनैव भाष्यसेतुनामिका टीका तेत्यवगम्यते । यद्यप्यत्र दृढतरप्रमाणाभावेन बलभद्रमिश्रपुत्रप-मनाभेनैवायं सेतुः कृत इति न निश्चयः तथापि समानकालि-त्वानुमानेन द्वयोः समानपितृभक्तिदर्शनेन च सम्भाव्यत इद-मिति ब्रूमः। तथाहि टड्साहब्महोदयप्रणीतराजस्थानेतिहासद-र्शनेन बुन्दीनगरे १३४१ख्रीष्टाब्दात्परं १४१९ख्रीष्टाब्दपर्यन्तसमयमध्ये वीरसिंहो राजासीदित्यवगम्यते । तत्र वीरसिंहः छन्दोनुरोधेन वीरवरपदेन वीरेन्द्र इत्यर्थमाश्रित्य पद्मनाभेन सङ्गृहीत इति सम्भाव्यते बलभद्रमिश्रपुत्रपद्मनाभस्य च यथोक्तयुक्त्या चतुर्दश-शताब्दिमध्ये स्थायित्वसम्भवः। ऋणयुक्तः पद्मनाभो मिथि-लाप्रदेशात् बुन्दीप्रदेशं गत्वा वीरसिंहादनृणो जात इति अमुनानृ-णीकृता वयमिति लिखितवानित्यपि सम्भाव्यते। पुस्तकं च तत्रैव लिखितमिति तत्प्रदेश एव प्राय उपलभ्यत इत्यपि सम्भा-व्यते ।

इत्थं च पद्मनाभसमानकालिककेशवमिश्रोऽपि १३४१ ख्रीष्टा-ब्द१४१९ख्रीष्टाब्दमध्य आसीदिति सम्भाव्यते । अन्ततो वर्धमानो-पाध्यायानन्तरकालिक चिन्नभट्टस्थितिकालचतुर्दशशताब्द्यन्तभा-र्वकालिकः केशवमिश्र इत्यत्राविसंवाद एवेति ॥
केचिन्मैथिलास्तु किम्वदन्तीमात्रसहाया मिथिलाप्रदेशान्तर्गत-सवग्रामनिवासी अभिनववाचस्पतिमिश्रस्य पौत्रः केशवमि-र्कभाषाद्वैतपरिशिष्टालङ्कारशेखरालङ्कारसर्वस्वादिबहुग्रन्थप्रणेता

तिमिश्रकृतन्यायतत्त्वालोकनामिकायां न्यायसूत्रटीकायां बाधना-लक्षण दुःखमिति सूत्रव्याख्यानावसरे दुःखविषयबुद्धिविषयप्रमेय-त्वमेव दुःखलक्षणमिति वाचस्पतिमिश्रा इति लेखो दृश्यते ततश्च ज्ञायते षड्दर्शनटीकाकृद्वाचस्पतिरेतदपेक्षयातिप्राचीन इति । तत्रैव न्यायतत्त्वालोके उदाहरणसाधर्म्यात् साध्यसाधनं हेतुरिति-व्याख्यानावसरे चिन्तामणिकृतस्त्वित्यादिना गङ्गेशोपाध्या-ल्लेखदर्शनाच्च । न्यायसूचीनिबन्धात्मकसूत्रसूचीग्रन्थस्य षड्दर्शन-काकृद्वाचस्पतिप्रणीतत्वम्—

नमामि धर्मविज्ञानवैराग्यैश्वर्यशालिने ।
निधये वाग्विशुद्धीनामक्षपादाय तायिने ॥

इति तात्पर्यटीकान्यायसूचीनिबन्धयोरुभयत्रैकाकारमङ्गलाचरणं दृष्ट्वा निश्चीयते । न्यायसूचीनिबन्धे चान्ते—

न्यायसूचीनिबन्धोऽसावकारि सुधियां मुदे ।
श्रीवाचस्पतिमिश्रेण वस्वङ्कवसुवत्सरे ॥

इतिलेखदर्शनात् पक्षधरसमानकालिकवाचस्पत्यपेक्षया तस्यातिप्राचीनत्वं ज्ञायते । अभिनववाचस्पतिमिश्रश्च भैरवनारायणराजाश्रितः पण्डित आसीदिति—

भाङ्गभाङ्गभाङ्ग्भा भैरवभूपतिदेवसभा ।

इतिवाचस्पतिप्रणीतभैरवनारायणनरपतिसभावर्णनगाथादर्शनेन

श्रीभैरवेन्द्रधरणीपतिधर्मपत्नी
राजाधिराजपुरुषोत्तमदेवमाता
वाचस्पतिं निखिलतन्त्रविदं नियुज्य
द्वैते विनिर्णयविधिं विधिवत् तनोति ॥

इतिभैरवपत्न्याज्ञानुसारिवाचस्पतिप्रणीतत्वबोधकद्वैतनि-क्रमणिकाश्लोकदर्शनेन

श्रीवाचस्पतिमिश्रेण मिथिलेश्वरसूरिणा ।
…मूर्द्धन्यश्रीगौतममतं महत् ॥

इति वाराणसीस्थमेडिकलहालनामकयन्त्रालयमुद्रितविज-
यनगरसंस्कृतसीरीज्सञ्ज्ञग्रन्थमालाषष्ठपुस्तके न्यायसूत्रोद्धार-
स्यास्य पद्यस्य दर्शनेन चावगम्यते ।

एतावत्पर्यन्तस्य प्रामाणिकतया स्वीकारे ऽपि तर्कभाषा-
टीकाकर्तुश्चिन्नभट्टस्य चतुर्दशशताब्दिशेषभागस्थायित्वे तर्कभा-
षाकर्तुश्च तत्पूर्वकालस्थायित्वे सिद्धे

वक्षोजपानकृत् काण संशये जाग्रति स्फुटे ।
सामान्यलक्षणा कस्मादकस्मादवलुप्यते ॥

इति दीधितिकारं प्रति पक्षधरकृतभर्त्सनकिम्वदन्तीसि[...]-
गाथायां वक्षोजपानकृदिति अतिबालदीधितिकारसम्बोधने
दीधितिकारकाले पक्षधरस्यातिवृद्धत्वसूचने ऽपि केशवपक्षधरवा[...]-
स्पतीनामतिदीर्घजीवित्वं विना यथोक्तसमयसामञ्जस्यासम्भ-
वेन अतिकष्टकल्पनया अतिदीर्घजीवित्वं तेषामङ्गीकृत्य सामञ्ज-
स्यसम्भवे ऽपि तर्कभाषाकर्तुः केशवमिश्रस्य द्वैतपरिशिष्टप्रणेतृत्वे
प्रमाणाप्राप्तेरस्माकमत्र सर्वथाऽविश्वासः ।

केचित्तु द्वौ पक्षधरमिश्रौ एको गङ्गेशकृततत्त्वचिन्तामणिग्र-
न्थस्यालोकनामकटीकाकारोऽपरश्च दीधितिकाररघुनाथशिरोम-
णिसमानकालिकः आलोककारश्च वर्धमानोपाध्यायानन्तरका-
लिको दीधितिकारपूर्ववर्तीति प्राहुः तत्र च दृढतरप्रमाणाभावा-
न्नास्माकमादरः । यत्तु डाक्तरराजेन्द्रलालमित्रसम्पादिते हस्त-
लिखितग्रन्थसूचीपत्रे प्रत्यक्षालोकस्यैकं पुस्तकं ऊनषष्ट्यधि[...]-
शततमे लक्षणसंवत्सरे लिखितं तेनोपलब्धमिति दृश्यते [...]
समीचीनं प्रमाणं येन पक्षधरद्वयं कल्पनीयं स्यात् ।

अपरश्च केशवनामधेयः काव्यप्रदीपनामालङ्का[...]क[...]
गोविन्दस्य पिता आसीदिति—

सोनोदेव्याः प्रथमतनयः केशवस्यात्मज[...]
श्रीगोविन्दो रुचिकरकवेः स्नेहपात्रं [...]न् ।

श्रीमन्नारायणचरणयोः सम्यगाधाय चित्तं
नत्वा सारस्वतमपि महः काव्यतत्त्वं व्यनक्ति ॥

इतिकाव्यप्रदीपप्रथमश्लोकदर्शनाज् ज्ञायते । स च मिथि-
लाप्रदेशान्तर्गतभटसीमरिग्रामनिवासी ठक्कुरोपाधिकोऽद्याप्य-
स्मिन् ग्रामे तद्वंशीया वर्तन्त इति मैथिलानां किम्वदन्त्या ज्ञायत
इत्यलमतिविस्तरेण ॥

अस्यास्तु न्यायप्रदीपाख्यटीकाया एकमेव पुस्तकं प्राप्तम-
स्माभिः तदप्यतिजीर्णं तस्यान्ते एवं लिखितं वर्तते ।

समाप्त ॥ शुभमस्तु ॥ लिखितं वासुदेवकायस्थकाशीदासपु-
त्रेण शुभमस्तु । संवत् । १६६० समय आषाढवदी द्वितीया पुस्तक-
समाप्त ॥ शुभं भवतु ॥ ग्रन्थो न्यायप्रदीपाख्यो निर्मितो विश्व-
कर्मणा । निर्माय खलु संख्यातो वाणाग्निरामभूमिभिः ॥ १३२५ ॥
श्रीरामचन्द्राय नमः ॥ ठ ॥ इति ।

एवं च १६६० संवत्सरलिखितटीकाग्रन्थादेव तत्पूर्वसमयव-
र्तित्वं टीकाकर्तुरवगम्यते । अस्यां टीकायां प्रायश उदयनाचार्यकु-
मारिलभट्टवरदराजादीनां प्राचीनतमानामेव कारिकाद्य उद्धृताः
तत्त्वचिन्तामणिटीकाभावप्रकाशकर्तू रुचिदत्तस्यापि नामोल्लेखपूर्वकं
मतमुद्धृतम् । यथास्मिन् पुस्तके १५३ पृष्ठे १८ पङ्क्तौ । रुचिदत्तस्तु
यत्कर्मजदुःखप्रागभावोऽस्ति तस्य भोगेनैव नाशः तत्प्रागभावस्य
प्रतियोगिजनकत्वनियमात अन्यथा प्रतियोगिरूपनाशकाभावे
तस्यात्यन्ताभावत्वापत्तेरित्यादि ।

रुचिदत्तस्तु पक्षधरमिश्रशिष्य इति चिन्तामणिभावप्रकाश-
टीकायामादौ—

अधीत्य रुचिदत्तेन जयदेवाज्जगद्गुरोः ।
चिन्तामणौ ग्रन्थमणौ प्रकाशोऽयं प्रकाश्यते ॥

इतिश्लोकदर्शनेनावगम्यते जयदेवस्यैव पक्षधरनामान्तरत्वे
[सं]मतत्वात् । पक्षधरस्य च दीधितिकारसमकालिकत्वं दीधि-
[तिका]रगुरुत्वप्रवादेन दीधितिकारं प्रति—

## विज्ञापनम् ।

अक्षोऽजपानकृत् काण संशये जायति स्फुटे ।
सामान्यलक्षणा कस्मादकस्मादपलप्यते ॥

इति पक्षधरकृतभर्त्सनगाथया चावगम्यते । एवं च दीधि-तिकारस्यापि श्रीगौराङ्गापरनामधेयश्रीकृष्णचैतन्यदेवसमकालि-कत्वं द्वयोर्वासुदेवसार्वभौमशिष्यत्वप्रवादेन चैतन्यजीवनचरिता-दिदर्शनेन चावगम्यते । श्रीकृष्णचैतन्यप्रभुश्च १४८५ खीष्टीयाब्दे जगन्नाथमिश्राज्जात इतीतिहासदर्शनेन ।

शाके चतुर्दशशते रविवाजियुक्ते गौरो हरिर्धरणिमण्डल आवि-रासीत् ।

इतिचैतन्यचन्द्रोदयलेखदर्शनाच्च निश्चीयते । एवं स[र्व]-तत्कालवर्ती रुचिदत्त आसीदिति १६६० संवत्संवत्सर( १६०३ ) खीष्टाब्दपूर्वं १४८५ खीष्टाब्दानन्तरं मध्ये न्यायप्रदीपाख्यटीकाका-रो विश्वकर्मा आसीदित्यसंशयमवगम्यते । न्यायप्रदीपाख्यटीका-कारश्च विश्वकर्मा प्रक्रियाप्रदीपनामकग्रन्थकर्तेति एतट्टीकापुस्तके प्रत्यक्षभावव्याख्यानावसरे १५२ पृष्ठे तत्त्वामत्ययार्थस्तु प्रक्रियाप्र-दीपेऽस्माभिर्निरूपितस्तत्रैवानुसन्धेय इतिलेखदर्शनादवगम्यते ॥

श्रीमान् केशवमिश्रो न्यायसूत्रानुसारिबालकोपयोगिग्रन्थान-तिविरलानुपलभ्य न्यायसूत्रानुसारिषोडशपदार्थतत्त्वनिरूपणाय स-रलतमं तर्कभाषानामकं प्रथमपाठार्थिबालकानां परमोपकारकं ग्रन्थं रचितवान् । अत एव ग्रन्थस्यादौ—

बालोऽपि यो न्यायनये प्रवेशमल्पेन वाञ्छत्यलसः श्रुतेन ।
संक्षिप्तयुक्त्यन्वितर्कभाषा प्रकाश्यते तस्य कृते मयैषा ॥ इति

मध्ये च प्रमाणनिरूपणानन्तरम्—

चत्वार्येव प्रमाणानि युक्तिलेशोक्तिपूर्वकम् ।
केशवो बालबोधाय यथाशास्त्रमवर्णयत् ॥ इति

अन्ते च तावतैव बालव्युत्पत्तिसिद्धेरिति च स्वीयग्रन्[थ]-प्रयोजनं स्वयमेव दर्शितम् । ग्रन्थस्यास्यापाततः श्रवणमा[त्रेण] सहजार्थबोधत्वेऽप्यतिविस्तृतबहुटीकादर्शनाद् दुरवबोध[त्व]-र्थतावगम्यते । तत्र च—

| टीकानामानि । | टीकाकर्तृनामानि । |
| --- | --- |
| न्यायप्रदीपः | ... विश्वकर्मा । |
| तर्कभाषाप्रकाशिका | ... गौरीकान्तसार्वभौमभट्टाचार्यः । |
| तर्कभाषाप्रकाशः | ... केशवमिश्रशिष्यगोवर्द्धनमिश्रः । |
| बालबोधिनी | ... |
| तर्कदीपिका | ... केशवभट्टः । |
| तर्कभाषाप्रकाशिका | ... कौण्डिन्यदीक्षितः । |
| तत्त्वप्रबोधिनी(१) | ... गणेशदीक्षितः । |
| तर्कभाषाप्रकाशिका | ... चिन्नभट्टः चैतन्यभट्टो वा । |
| युक्तिमुक्तावली | ... नागेशभट्टः । |
| तर्कभाषाप्रकाशिका | ... बलभद्रः । |
| परिभाषादर्पणम् | ... भास्करभट्ट । |
| तर्कभाषासारमञ्जरी | ... माधवदेवः । |
| न्यायप्रकाशिका | ... |
| न्यायसङ्ग्रहः | ... रामलिङ्ग । |
| तर्कभाषाभावः | ... रोमविल्ववेङ्कटबुद्धः । |
| उज्ज्वला | ... गोपीनाथः । |
|  | ... मुरारिभट्टः । |
|  | ... भिन्नीभट्टः । |
|  | ... गुण्डुभट्टः |
|  | ... नारायणभट्टः |

तदिदं तर्कभाषापुस्तकमेकमस्मत्पितृचरणसङ्गृहीतास्मद्गृ-
पुस्तकालये दृष्ट्वा गौतमीयसूत्रपाठार्थिनां परमोपकारकमिद-

(१) गणेशदीक्षितकृततत्त्वप्रबोधिनीटीकायां न्यायविलासाख्या विश्व-
टकृता एका टीका वर्तते । तत्राद्यश्लोकार्धं यथा व्याख्यातं तत्त्वप्रबो-
विश्वनाथः स्वमातरमिति ? वर्णेलमहाशयकृततञ्जोरपुस्तकाल-

मित्यवधार्य एतदुपयुक्तसरलामतिविस्तृतटीकासहितमेतन्मुद्रयित्वा प्रकाशयितुकामः टीकापुस्तकमूलपुस्तकान्तरसहायार्थी टीकापुस्तकादिकमलभमान इच्छामात्रसहाय आसम् । इह च वाराणसीस्थराजकीयप्रधानसंस्कृतपाठशालीयपुस्तकालये ऽनतिविस्तृतमेकमेव न्यायप्रदीपाख्यटीकापुस्तकं मूलपुस्तकत्रयं चावलोक्यात्रत्यराजकीयप्रधानसंस्कृतपाठशालीयप्रधानाध्यक्ष श्री १०० मद्आर्थर वेनिस्साहब महाशयानामाज्ञया मुद्रयितुमारब्धेन मया प्रथमत[ः त]र्कभाषाया मूलपुस्तकत्रयमशेषमलब्धम् । टीकापुस्तकान्तरस्य ह[स्त]लिखितपुस्तककानां मुद्रितभूयिष्ठत्वेऽनुपलब्ध्यात्यन्तदुर्लभतां म[न्य]मानेनाऽत्रत्यपुस्तकालयस्यैकमेव पुस्तकं क्वचिल्लुप्ताक्षरमतिज[ीर्ण]मासाद्य तर्कभाषा मुद्रयितुमारब्धा महतायासेन । मुद्रितेषु तु [...] तिषु विंशेषु स्वदेशं गत्वा पितृचरणसङ्गृहीतपुस्तकालयस्थं ह[...]ङ्काक्षरलिखितं तर्कभाषामूलपुस्तकमपि गृहीतम् । यदस्मिन्मुद्रितपुस्तके चतुर्थपुस्तकत्वेनावकल्पितम् । अस्मिंश्च पुस्तके बहवोऽधिकाः पाठाः पाठान्तराणि च बहूनि वर्तन्ते तानितानि पुस्तकप्राप्त्यनन्तरं तत्तत्स्थले टिप्पणयाकारेण प्रायः सन्निवेशितानि ।

अस्मिन् कार्येऽस्मद्गुरुचरणा वाराणसीस्थराजकीयप्रधानसंस्कृतपाठशालीयप्रधानाध्यापकनैयायिकशिरोमणिमहामहोपाध्यायश्रीयुक्तकैलासचन्द्रशिरोमणिभट्टाचार्यचरणाः परमसहाया अस्माकम् । अत्रत्यराजकीयप्रधानसंस्कृतपाठशालीयपुस्तकालयाध्यक्षैः श्रीयुक्तविन्ध्येश्वरीप्रसादद्विवेदिभिरपि स्थलविशेषदर्शनेनोपकृतोऽस्मीति ।

अस्मिन् मुद्रितपुस्तके ऽस्मत्प्रमादवशात् सीसकाक्षरदौ[र्ब]ल्यादिदोषाच्च यद्यदशुद्ध्यादिकं तत् सर्वं शोधयित्वा [...] वारा हि साधव इति । सन्तुमर्हन्ति गुणमात्रदर्शिनः सन्त [...] प्रसीदतु च भगवान् सर्वान्तर्वर्ती सर्वज्ञो व्यापारेणानेन श्री[...]लदेव इति प्रार्थयते ।

श्रीसुरे[...]

॥ श्रीः ॥

# तर्कभाषायाः सूचीपत्रम् ।

——:o:——

—:o:—

॥ श्रीः ॥

# न्यायप्रदीपाख्यटीकायाः सूचीपत्रम् ।

—:o:—

॥ श्रीः ॥

# तर्कभाषायां चतुर्थपुस्तकपाठानां मूले ऽसन्निविष्टानामधिकानां तत्तत्स्थले सन्निवेश्यानां सूचीपत्रम् ।

—:o:—

२८ पृष्ठायां ४ पङ्क्तौ । 'ज्ञानं जन्यते' इत्यस्यानन्तरम् ।

उक्तं च ।

स्वरूपमात्रसम्बोधं निर्विकल्पं प्रचक्षते ।
विशिष्टधर्मिसम्भिन्नं सविकल्पं ततो द्विधा ॥
बालमूकादिसम्बोधसदृशं निर्विकल्पकम् ।
साक्षाद्भूतं भवेत् तत्तु यत किञ्चिद् बुध्यते बहिः ॥
अन्तर्बाह्यविशिष्टं यत् सविकल्पमिति स्मृतम् ।

इति पाठोऽधिकः ।

३१ पृष्ठे १ पङ्क्तौ । 'इन्द्रियेण गृह्यते' इत्यस्यानन्तरम् । अत्र कश्चिदाह न भूतलादेरन्योऽभावो नाम कश्चिदस्ति तथाहि भूतलमेव द्विविधं किञ्चिद् घटवत् किञ्चिच्च भूतलमेव केवलम् । तत्र केवलभूतल एव घटाभावव्यवहारो लोकस्य नेतरस्मिन् । अत्रोच्यते । न तावद् यथाकथञ्चिद् भूतलं घटाभावव्यवहारकारणं घटवत्यपि भूतले घटाभावव्यवहारप्रसङ्गात । नापि केवलभूतलमात्रं घटाभावव्यवहारकारणम् । विकल्पासहत्वात् । तथाहि कैवल्यं भूतलस्वरूपाद् भिन्नं न वा भिन्नमपि घटविरोधि न वा प्रथमे स एवाभावोऽस्माभिरभिधीयते कैवल्यमिति भवद्भिः अत्र च संज्ञामात्रे विप्रतिपत्तिः न वस्तुनि द्वितीये तु स एव घटवति प्रसङ्गो घटे सत्यपि कैवल्यसम्भवात् भूतलादभिन्नं चेत् कैवल्यं पुनरपि घटवति प्रसङ्गो घटे सत्य[illegible] भूतलस्वरूपानपगमात । अथोच्यते न यथाकथञ्चि[illegible]

नापि केवलं किं तु दृश्यप्रतियोगिकभूतलमभावव्यवहारहेतुः न घटवति प्रसङ्गात् विद्यमानस्य प्रतियोगिनो घटस्य सुतरां दृश्यमानत्वात्। अथ विद्यमानो घटो न प्रतियोगी किं त्वयोग्य एवासौ हन्त किमिदं प्रतियोगित्वमनुभूयमानत्वमुत स्मर्यमाणत्वम्। आद्ये ऽभाव एव द्वितीये एकत्रानुभूयमानस्या' न्यत्राभावव्यवहारो न स्यात् अयमिह नास्तीति एतद्भूतल एव प्रथमदण्डोपलब्धस्य घटस्य द्वितीयदण्डोपलब्धौ स एवायं तदवस्थ इति स्मर्यमाणे ऽपि घटाभावव्यवहारो न स्याद् यदि स्यादतिव्याप्तिः। ननु भवतु भूतलादेरन्यो ऽ' भावः प्रत्यक्षप्रमाणपरिच्छेद्यत्वं तु तस्य कुतः। इन्द्रियाणां सम्बद्धार्थग्राहकत्वात्। [ तथाहि इन्द्रियाणि प्राप्यप्रकाश' कारीणि ज्ञानकारणत्वादालोकवत्। यद्वा इन्द्रियाणि स्ववि' षयं प्राप्य कार्यं कुर्वन्ति करणत्वाद्वासीवत्। यद्वा चक्षुःश्रोत्र प्राप्यकारिणी बहिरिन्द्रियत्वात् त्वगादिवत् त्वगादीनां तु प्राप्यकारित्वमुभयवादिसिद्धमेव। तेनाभावो ऽपि यदीन्द्रियेण सम्बद्धः संयोगसमवाययोरेव मुख्यत्वात्? विशेषणविशेष्यभा' वश्च न सम्बन्धः सम्बन्धो हि सम्बन्धिभ्यां भिन्नो भवत्यु' भयाश्रित एकश्च। यथा भेरीदण्डसंयोगः स हि भेरीदण्डाभ्यां भिन्न उभयाश्रितश्चैकश्च। न च विशेषणविशेष्यभावस्तथा। तथाहि दण्डपुरुषयोर्विशेषणविशेष्यभावो न ताभ्यां भिद्यते न हि दण्डस्य विशेषणत्वं पदार्थान्तरमपि तु स्वरूपमेवाभावस्य विशेषणत्वात् न चाभावे कस्यचित पदार्थस्य द्रव्याद्येकतरस्य सम्भवः। तस्माद् भावस्याभावस्य च स्वोपरक्तबुद्धिजनकत्वं यत् स्वरूपं तदेव विशेषणत्वं न तु तदर्थान्तरम्। एवं व्याप' त्वादयोऽप्यूह्याः। स्वप्रतिबद्धबुद्धिजनकत्वं स्वरूपमेव हि [illegible]आदीनां कारणत्वमपि कार्यानुकृतान्वयव्यतिरे'

किंस्वरूपमेव तत्त्वादीनां न त्वर्थान्तरं अभावस्यापि व्याप-
कत्वात् कारणत्वाच्च न ह्यभावे सामान्यादिसम्भवः तदेवं
विशेषणविशेष्यभावो न विशेषणस्वरूपाद् विशेष्यस्वरूपाद्
भिन्नो नाप्युभयाश्रितो विशेषणभावमात्रस्य सद्भावाद् विशे-
ष्यभावस्याभावात् । विशेष्ये तु विशेष्यभावमात्रस्य सद्भा-
वाद् विशेषणभावस्याभावात् । नापि विशेषणविशेष्यभावस्यै-
कत्वं विशेषणं च विशेष्यं च तयोर्भाव इति द्वन्द्वात् परो भाव-
शब्दः प्रत्येकमभिसम्बध्यते तथा च विशेषणभावो विशेष्यभा[वः]
इत्युपपन्नं द्वौ च तावेकश्च सम्बन्धः । तस्माद्विशेषणविशेष्य
भावो न सम्बन्धः । व्याप्यव्यापकभावादयोऽपि । सम्बन्ध
शब्दप्रयोगस्तु उभयनिरूपणीयत्वसाधर्म्येणोपचारात् ।] (१) न
चेन्द्रियाभावयोः संयोगसमवायौ स्तः कथमिन्द्रियेणाभावस्य
ग्रहणमिन्द्रियेण सह साक्षात् परम्परया वा मुख्यसम्बन्धाभा-
वादेवेन्द्रियाग्राह्यत्वमिति घटगतरूपादौ नियमदर्शनात
नैवम् मानान्तरेणाप्यभावस्याग्रहणप्रसङ्गात् । तथाहि भूतला-
दिना अधिकरणेन सहाभावस्य सम्बन्धो वाच्यो मुख्या-
धिकरणे ऽभावो गृहीतव्यो निरधिकरणस्य तस्यानिरूपणात् ।
सद्भ्यामभावो निरूप्यते नैकेन सतेति न्यायात । न च भूत-
लादिना अधिकरणेनसहाभावस्य मुख्यः सम्बन्धोऽस्ति कथं
भूतलादौ मानान्तरेणापि तस्य ग्रहणम् । येन यस्य मुख्यः
सम्बन्धः तस्यैव तत्र मानान्तरेणापि ग्रहणम् । पर्वतवह्न्यादौ
नदीतीरपङ्कफलादौ नियमदर्शनात् । अथेन्द्रियेण ग्रहणे
भावस्यायं नियम इति नियमस्य भावावच्छिन्नत्वादसम्ब-
न्धाभावग्रहणे त्वतिप्रसङ्गस्य विशेषणविशेष्यभावेनापि निरा-
कर्तुं शक्यत्वाद् भूतलादिना मुख्यसम्बन्धरहितस्यापि
भूतलादावधिकरणे ग्रहणं मानान्तरेणापि क्रियते हन्त इन्द्रि-
येणापि किं न गृह्यतामिति इन्द्रियेण सहमुख्यसम्बन्ध[...]

(१) [ ] एतच्चिह्नमध्यस्थ पाठः क्वचिदक्रमो मुद्रिततर्कभाषापु[...]
ऽस्मिन्ननुपलब्धिप्रमाणान्तरत्वखण्डनावसरे ८४ पृष्ठायां १ पङ्क्ति[...]
पुनर्दृश्यते ।

इन्द्रियग्राह्यमिति नियमस्य भावावच्छिन्नत्वाद् भावो हि गृह्यमाणो मुख्यसम्बन्धेन गृह्यते नान्यथेति नियमार्थः तेनाभावे ऽसत्यपि मुख्यसम्बन्धे इन्द्रियेण गृह्यमाणे न कश्चिद्दोषः । अथ प्रसङ्गदोषस्तु विशेषणविशेष्यभावेन निराकृत इति परेणाप्युक्तमेव । तस्मादिन्द्रियस्याभावग्रहणे न सम्बन्ध इति संयोगसमवायरूपमेव सम्बन्धं मन्यमानेन भवता सुष्ठूक्तमेव ।

> यत्रोभयोः समो दोषः परिहारो ऽपि वा समः ।
> नैकः पर्यनुयोक्तव्यस्तादृश्यर्थविचारणे ॥ (१)

सम्बन्धः प्रथमतो हि द्विविधः भिन्नोऽभिन्नश्च भिन्नः संयोगः समावायः अभिन्नस्तु स्वरूपमवस्या च अवस्था च विशेषण-विशेष्यभाव उच्यते । न हि संयोगसमवायौ सम्बन्धिनासहितावा-काशात् पतितौ सम्बन्धव्यपदेशभाजौ । परेणाप्युक्तं तादृ-श्यर्थविचारण इति । तस्मादिन्द्रियस्यैवाभावग्रहणशक्तत्वात् किमभावाख्यप्रमाणान्तरकल्पनेनेति । भवति च प्रयोगः ; विवादाध्यासितमभावज्ञानं प्रत्यक्षमनन्यथासिद्धेन्द्रियान्वय-व्यतिरेकानुविधायित्वाद् घटज्ञानवदिति । न चाश्रयभूतला-दिग्रहणोपक्षीणत्वादिन्द्रियस्यान्यथासिद्धत्वमिति वाच्यम् । असति बलवति बाधके ऽन्यत्रोपक्षीणत्वस्य वक्तुमशक्यत्वात् । यत्तु इन्द्रियाभावयोरसम्बन्धो बाधक इत्युक्तं तद्दूषितमेव । तदेवं सम्बन्धविशेषणविशेष्यभावलक्षणेनेन्द्रियार्थसन्निकर्षे-णानुपलम्भसहायेनाभाव इन्द्रियेण गृह्यते ॥ इत्यधिकः पाठः ।

७ पृष्ठे २ पङ्क्तौ । 'ऽतो लिङ्गपरामर्शोऽनुमानम्' इत्यस्यानन्त-रम् तदुक्तम् ।

---

(१) अयं श्लोकोऽग्रे ऽपि अस्मिन् पुस्तके अनुपलब्धिप्रमाणान्तरत्वख-[illegible]यायां वर्तते । तत्र च शेषचरणे तादृगर्थविचारण इति पाठः ।

> लिङ्गत्वेन परामर्शो योऽनुमानं तदुच्यते ।
> व्याप्तिः पक्षस्य धर्मत्वं मिलितं लिङ्गलक्षणम् ॥

इति पाठोऽधिकः ।

३७ पृष्ठे ५ पङ्क्तौ । 'व्याप्तिबलेनार्थगमकं लिङ्गम्' इत्यत्र । व्याप्तिबलेन यद् यस्य गमकं तत् तस्य लिङ्गम् । इति पाठो दृश्यते ।

३८ पृष्ठायां १ पङ्क्तौ । 'धूमोऽग्नेर्लिङ्गम्' इत्यस्यानन्तरम् ।
यदाह ।

> अनुमेयेन सम्बद्धं प्रसिद्धं च तदन्विते ।
> तदभावे च नास्त्येव तल्लिङ्गमनुमापकम् ॥
> विपरीतमतो यत् स्यादेकेन द्वितयेन वा ।
> विरुद्धासिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीत् ॥

इति पाठोऽधिकः ।

४२ पृष्ठे २ पङ्क्तौ । 'स्वाभाविकश्च सम्बन्धो व्याप्तिः' इत्यस्यानन्तरम् । इत्यविनाभाव इति प्रतिबन्धश्चोच्यते । इत्यधिकः । पाठः ।

४३ पृष्ठे ८ पङ्क्तौ । 'किं तु सन्दिग्धे' इत्यस्यानन्तरम् ।
अन्यच्च ।

> न निर्णीते न चाज्ञाते न्यायः सन्दिग्धके ऽपि च ।
> न हि दृष्टे च कारिणि चीत्कारेणानुमीयते ॥

इत्यधिकः पाठः ।

४६ पृष्ठे २ पङ्क्तौ । 'परार्थमनुमानम्' इत्यस्यानन्तरम् ।
यथाहुः ।

> पञ्चावयववाक्येन लिङ्गस्य प्रतिपादकम् ।
> न्याय इत्युच्यते शास्त्रे परस्तस्मात् प्रबोध्यते ॥

इत्यधिकः पाठः ।

---:o:---

॥ श्रीः ॥

# तर्कभाषा ।

## न्यायप्रदीपाख्यटीकासहिता ।

---

बालोऽपि यो न्यायनये प्रवेश-
मल्पेन वाञ्छत्यलसः श्रुतेन ।
सङ्क्षिप्त(१)युक्त्यन्विततर्कभाषा
प्रकाश्यते तस्य कृते मयैषा ॥

---

प्रणम्य विघ्नहर्तारं गुरुं दामोदरं तथा ।
टीकेयं तर्कभाषायास्तन्यते विश्वकर्मणा ॥

शिष्टशिष्टाचारानुमितवेदबोधितकर्तव्यताकं प्रारिप्सित-विघ्नविघातकं परमेश्वरनमस्कारलक्षणं मङ्गलं मेघदूतादाविव मनसा कृत्वा तत्र प्रेक्षावत्प्रवृत्तिविषयादि प्रतिजानीते । बालोऽपीति । अत्र निबन्धाकरणं दृष्ट्वा मङ्गलं न कृतमिति न भ्रमितव्यम् । समा-प्त्या लिङ्गेन तदनुमानात् । ननु मङ्गले समाप्तिकारणताबोधक-प्रमाणस्याभावात् कथमिदमनुमानम् । अथ शिष्टशिष्टाचारानु-मितो वेद एव तत्र तत्कारणताबोधक इति चेत् । न । [illegible] मङ्गले कादम्बर्यादौ समाप्त्यभावात् कृतेऽपि मङ्गले प्र[illegible] कानुष्ठितसमाप्तेरन्वयव्यतिरेकाभ्यां व्यभिचारात् त[illegible] मास्तीति कथं वेदेनापि तद्बोधनमिति । अत्रैव [illegible] वेदबोधितकर्तव्यताकत्वलौकिकाविगीतशिष्टाचार[illegible]त्वादु[illegible]

---

(१) सङ्क्षिप्य--पा० २ पु० ।

वदिति वेदानुमानम् । अत्र हेतावलौकिकश्चासावविगीतश्चासौ शिष्टाचारश्चेति स तथा तस्य विषयत्वादिति समासः । तत्राचारविषयत्वादित्युक्ते चैत्यवन्दनादौ व्यभिचारः स्यात् चैत्यं नाम बौद्धानां देवतालयः तस्मिन्नपि बौद्धप्रयत्नविषयत्वमस्ति वेदबोधितकर्तव्यताकत्वं च नास्तीत्यतो विशेषणं शिष्टेति । शिष्टास्तु स्वीकृतवेदप्रमाणभावाः । अत्र यद्यपि स्वीकृतयावद्वेदप्रमाणभावत्वं किञ्चिद्वेदाज्ञानात् तत्प्रमाणभावमस्वीकुर्वत्यपरसकलवेदप्रमाणभाव स्वीकुर्वत्यपि दुर्लभं स्वीकृतयत्किञ्चिद्वेदप्रमाणभावत्वं तु न हिंस्यात् सर्वा भूतानीत्यादि(१) भास्यीयते । मयैषा सङ्क्षिप्तयुक्त्यन्विततर्कभाषा प्रकाश्यते । तर्काः षोडशपदार्थास्ते भाष्यन्ते यत्रेति तर्कभाषा युक्तिभिरन्विता युक्त्यन्विता सङ्क्षिप्ता चासौ युक्त्यन्विता चेति सङ्क्षिप्तयुक्त्यन्विता सा चासौ तर्कभाषा चेति विग्रहः । सङ्क्षिप्येति पाठे तु सुगमा योजना । यद्वा हे अन्वित शिष्य सङ्क्षिप्तयुक्ति यथा स्यात्तथैषा तर्कभाषा मया प्रकाश्यत इति योजना । सङ्क्षिप्तयुक्त्या अन्वितेति तत्पुरुषे कर्तव्ये तु पूर्वपदार्थस्याप्राधान्ये ऽतसव्युत्पत्त्यर्थया सङ्क्षिप्तयुक्तेरेव विधेयांशभूतत्वेनाविमृष्टविधेयांशो दोषः स्यात् । सङ्क्षिप्तत्वमत्र शब्दतो नार्थत इति ज्ञेयम् । किमर्थं प्रकाश्यत इत्यत आह । तस्य कृत । इति कृत इत्यव्ययं तादर्थ्यवाची तदर्थमित्यर्थः । तस्य कृत इत्यत्र तच्छब्दो यच्छब्दमपेक्षत इत्याह । य इति । विशेष्यं निर्दिशति । बाल इति । यो बालोऽपि प्रमाणादिषोडशपदार्थज्ञानशून्योऽपि न्यायनये न्यायशास्त्रे प्रवेशं वाञ्छ-

(१) अस्मादर्शपुस्तके कश्चिदंशः पतितः ।

प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम इति न्यायस्यादिमं सूत्रम् । अस्यार्थः । प्रमाणादिषोडशपदार्थानां तत्त्व(१)ज्ञानान्मोक्षप्राप्तिर्भवतीति । न च प्रमाणादीनां तत्त्वज्ञानं

---

र्ति । वाञ्छतिः सकर्मक इति कर्माकाङ्क्षायां प्रवेशमिति कर्म तच्चोत्पाद्यम् । ननु तत्र प्रवेशं वाञ्छन्नपि चिरन्तनग्रन्थानभ्यस्य ज्ञास्यति किमेतद्ग्रन्थनिर्माणप्रयासेनेत्यत आह । अलस इति । अल्पेन श्रुतेनेति । य आलस्ययुक्तश्चिरन्तनग्रन्थपाठाशक्तोऽल्पेन श्रुतेन श्रवणेन व्युत्पत्तिमिच्छति तदर्थं मदीयप्रयास इत्याशयः । श्रुतेनेत्यत्र नपुंसके भावे क्त इति भावे निष्ठा । अस्य ग्रन्थस्य न्यायशास्त्रप्रकरणत्वात् तच्छास्त्रस्य यद्विषयप्रयोजनसम्बन्धाधिकारिरूपं प्रवृत्त्यौपयिकमनुबन्धचतुष्टयं तदेवास्यापीत्याकलनीयम् । अथ शास्त्रस्यापि किं विषयप्रयोजनादि येन तद्विषयप्रयोजनादिनास्यापि विषयप्रयोजनादिमत्त्वं सिध्यतीति चेत् शृणु । तत्र प्रमाणादयः पदार्थाः प्रतिपाद्यत्वेन विषयाः । तत्त्वज्ञानं मोक्षसाधनत्वात् प्रयोजनम् । तत्कामोऽधिकारी । शास्त्रस्य पदार्थानां च प्रतिपाद्यप्रतिपादकभावः सम्बन्धः । शास्त्रतत्त्वज्ञानयोश्च कार्यकारणभावः । तत्त्वज्ञानस्य पदार्थानां च विषयविषयिभाव इत्यादि । अवान्तरविषयप्रयोजने तु बालोऽपीतिश्लोकेनोक्ते । प्रकाश्यमाना तर्कभाषा विषयः । प्रमाणादिपदार्थज्ञानशून्यं प्रति तत्प्रबोधनं प्रयोजनम् ।

विषयप्रयोजनादिप्रतिपादनपरं न्यायशास्त्रस्याद्यं सूत्रमाह प्रमाणेति । बह्वर्थसूचनात् सूत्रम् । तथोक्तम् ।

---

(१) पदार्थतत्त्व–पा० २ पु० ।

स्वल्पाक्षरमसन्दिग्धं सारवद्विश्वतो मुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः(१) ॥ इति ।

प्रमाणानि च प्रमेयं च संशयश्च प्रयोजनं च दृष्टान्तौ च सिद्धान्ताश्च अवयवाश्च तर्कश्च निर्णयश्च वादश्च जल्पश्च वितण्डा च हेत्वाभासाश्च छलानि च जातयश्च निग्रहस्थानानि चेति द्वन्द्वः । यद्यप्यत्र समस्यमानपदार्थयोः प्रमाणप्रमेययोर्भेदाद् भेदप्रतिपादकद्वन्द्वानुपपत्तिस्तथापि पदार्थतावच्छेदकभेदादेव द्वन्द्वस्य साधुत्वम् । न्यायस्येति । न्यायशास्त्रस्येत्यर्थः । शास्त्रशब्दार्थस्तु

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥(२)

इत्यनेन ज्ञेयः । सूत्रे निःश्रेयसेत्यत्र निश्चितं श्रेयो निःश्रेयसमिति कर्मधारये ऽचतुरेत्यादिसूत्रेणादन्तत्वं निपात्यते तच्चात्र मोक्षरूपं ग्राह्यम् । तत्त्वज्ञानान्मोक्षप्राप्तिरिति । अनारोपितरूपत्वं तत्त्वशब्दार्थः । तदप्यनारोपः प्रमा तद्विषयत्वम् । न त्वारोपाविषयत्वं सर्वस्यैवारोपविषयत्वात् । इदं च तस्य भावस्तत्त्वमित्यवयवार्थमनपेक्ष्यैवोक्तं ऽयं तत्त्वपदस्य रूढ्याश्रयणेनेति ज्ञेयम् । तदुक्तम् ।

लब्धात्मिका सती रूढिर्भवेद्योगापहारिणी ।
कल्पनीया तु लभते नात्मानं योगबाधतः ॥(३) इति ।

---

(१) अयं श्लोकः पराशरोपपुराणे १८ अध्याये वर्तते । स्वल्पाक्षरमि-त्यपि केचित् पठन्ति । मुग्धबोधटीकायां दुर्गादासेन शिशुपालवधटीकायां [म]ल्लिनाथेनाप्ययं श्लोक उद्धृतः । (२) मीमांसाश्लोकवार्त्तिके शब्द-[परि]च्छेदे ४ कारिका । पृ० ४०६ (३) इयं कारिका कुमारिलभ-[ट्टस्य]। यतः सप्तमीतत्त्वे मानलक्षणप्रकरणे तदुक्तं भट्टपादैरित्यादिना [र]घुनन्दनभट्टाचार्यैरियं कारिका उद्धृता ।

सम्यग् ज्ञानं तावद्भवति यावदेषामुद्देशलक्षणपरीक्षा न क्रियन्ते । यदाह भाष्यकारः । त्रिविधा चास्य शास्त्रस्य प्रवृत्तिरुद्देशो लक्षणं परीक्षा चेति । उद्देशस्तु नाममात्रेण वस्तुसङ्कीर्तनम् । तच्चास्मिन्नेव सूत्रे कृतम् ।

---

अत्र तत्त्वज्ञानस्य मोक्षजनकत्वं प्राप्यते न शास्त्रस्येति शास्त्रस्य तत्फलाभावार्थं तत्त्वं ज्ञायतेऽनेनेति व्युत्पत्त्या तत्त्वज्ञानं शास्त्रमिति गृह्यते। शास्त्रादित्येव वक्तव्ये तत्त्वज्ञानादितिपदं शास्त्रस्यानुमितिरूपमननजनकलिङ्गज्ञानजनकेन तत्त्वज्ञानमुत्पाद्य मोक्षमुत्पाद्यत इत्यर्थं बोधयितुमित्याशयः । तत्त्वज्ञानादिति च पञ्चमी प्रयोजकत्वे न हेतौ शब्दात्मकस्य तस्याशुतरविनाशित्वेन कालान्तरभाविमोक्षजनकत्वासम्भवात् नापि द्वारद्वारिभावेन द्वारं हि श्रवणं वा मननं वा निदिध्यासनं वा तत्त्वसाक्षात्कारो वा मिथ्याज्ञानध्वंसो वा। नाद्यः। श्रवणस्य श्रुतिवाक्यसाध्यत्वेन शास्त्रासाध्यत्वात् । न द्वितीयः । मननस्यानुमितिरूपत्वेन शब्दात्मकशास्त्रासाध्यत्वात् । न तृतीयः । निदिध्यासनस्य स्मृतिरूपत्वेन संस्कारमात्रसाध्यत्वात् । न चतुर्थः । तस्य साक्षात्कारत्वादेव शास्त्रासाध्यत्वात् नापि पञ्चमः । मिथ्याज्ञानध्वंसस्यापि मोक्षवत् कालान्तरभावित्वेन शास्त्राजन्यत्वात् । इष्टप्रयोजकताज्ञानमेव प्रवर्तकं लाघवात् न तत्साधनताज्ञानं गौरवात् तृप्त्यर्थिनस्तण्डुलक्रयणादौ प्रवृत्तिर्न स्याच्च । प्रयोजकत्वे च पञ्चम्या न लक्षणा गौरनित्य इतिवदेकदेशवादायान्वयोपपत्तेः तत्र गोत्वरूपविशेषणांशे बाधात् स्वतन्त्रोपस्थितायां व्यक्तावेकदेशभूतायामनित्यत्वान्वयः प्रकृते च नियतपूर्ववर्तित्वरूपप्रयोजकत्वांशे अन्वय इति तु भेदः । शास्त्रप्रयोज्यं तत्त्वज्ञानमपि न सा[क्षा]न्मोक्षं जनयति किं तु मिथ्याज्ञानध्वंसादिक्रमेणेति ज्ञेयम् । [तदुक्तं] गौतमेन । दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापा[ये]

लक्षणं त्वसाधारणधर्मवचनम् । यथा गोः सास्ना-

---

नन्तराभावादपवर्ग(१)इति । त्रिविधा चेति । तिस्रो विधा
यस्याः सा त्रिविधा । अस्येति । अस्यैव शास्त्रस्येत्यर्थः । प्रवृत्ति-
र्व्यवहारः । त्रैविध्यमेव दर्शयति । उद्देश इति । यद्यप्युद्देशो
…भागो लक्षणं परीक्षा चेति प्रवृत्तिचातुर्विध्यकथनमुचितं तथापि
…शेषनाममात्रसङ्कीर्तनरूपं विभागमुद्देश एवान्तर्भाव्य त्रैवि-
…ोक्तिः । प्रथमोद्दिष्टमुद्देशं प्रथमं लक्षयति । उद्देशस्त्विति ।
…र्तनमुद्देश इत्युच्यमाने समुद्रघोषादावतिव्याप्तिस्ततः सङ्कीर्तन-
…ति । एतावत्युच्यमाने शशविषाणमित्यादावतिव्याप्तिस्ततो
…स्तुसङ्कीर्तनमिति । एतावत्यप्युच्यमाने घट इत्यादावतिव्याप्ति-
स्ततो नामेति । इयत्यप्युच्यमाने प्रमाकरणं प्रमाणमित्यादौ लक्षण-
वाक्ये गते तत्रापि प्रमाणमिति लक्ष्यभागस्य वस्तुभूतस्य नाम्ना
सङ्कीर्तनादत उक्तं नाममात्रेणेति । अथ लक्ष्यभागस्य लक्षणेनानभि-
धानात् नाममात्रेण लक्ष्यमभिधीयत इति पुनस्तत्रैवातिव्याप्तिरिति
चेत् । न । सामानाधिकरण्यबलेन लक्षणभागेनापि लक्ष्याभिधानाद्
भवति मात्रपदेन तद्व्यावृत्तिः । ननु पृथिव्या गन्धो लक्षणमिति
व्यधिकरणे तद्वाक्ये तथाप्यतिव्याप्तिस्तत्र केवलेन नाम्ना लक्ष्या-
भिधानादिति चेन्नाम्ना वस्तुसङ्कीर्तनमात्रमुद्देश इति भिन्नक्र-
मेण मात्रपदतात्पर्यात् । ननु लक्ष्यपदेन लक्ष्यमुद्दिश्य लक्षणविधा-
नात् लक्षणात्मकशास्त्रे लक्ष्यभागस्यापि सङ्ग्राह्यत्वात् किमर्थं
…तातिव्याप्तिवारणमिति चेत् । न । लक्षणाद्यन्तर्गतोद्देशात्
…ुद्देशस्य प्रणयनान्न तस्य सङ्ग्राह्यता । ननु मौनिकृतग्रन्थो-
… सङ्कीर्तनमव्यापकमिति चेत् । न । ज्ञायमानलक्षणवाक्याद्य-

---

(१) न्यायसूत्रम् । अ० १ आ० १ सू० २ । तदनन्तराभावादपवर्ग इत्या-
…राधामोहनगोस्वामिभट्टाचार्यकृतन्यायसूत्रविवरणे च पाठः ।

दिमत्त्वम् । लक्षितस्य लक्षणमुपपद्यते न वेतिविचारः परीक्षा । तेनैते लक्षणपरीक्षे प्रमाणादीनां तत्त्वज्ञानार्थं कर्तव्ये(१) ।

तत्रापि प्रथममुद्दिष्टस्य प्रमाणस्य तावल्लक्षणमुच्यते ।

---

समभिव्याहृतं नाम उद्देश इति तदर्थं विवक्षान्तरकरणात् स मुख्यम् । लक्षणस्य दूषणत्रयमस्ति अव्याप्तिरतिव्याप्तिरसम्भव श्चेति । तत्र लक्ष्यैकदेशे लक्षणस्याकर्तनमव्याप्तिः अलक्ष्ये लक्षणस्य वर्तनमतिव्याप्तिः क्वापि लक्ष्ये ऽवर्तनमसम्भवः । इदं त्रयं सर्वत्र परिहर्तव्यम् । लक्षणात्मकं शास्त्रं लक्षयति । लक्षयतीति । लक्षणं लक्षणवाक्यमित्यर्थः । लक्षणस्य लक्षणकथने तु असाधारणधर्म इत्येव लक्षणस्य लक्षणं वचनग्रहणं तु प्रामादिकं समानासमानजातीयव्यवच्छेदो लक्षणार्थः स च साधारणधर्मेण न भवतीत्यसाधारणेत्युक्तम् । यन्न सर्ववृत्तीत्यसाधारणशब्दार्थः । यद्यप्याकाशमप्यसर्ववृत्तीति तत्रातिव्याप्तिस्तथापि तद्वारणाय धर्मवचनमिति वा धर्मो धर्मशब्दो वचनं वाचको यस्येति तत् तथा । आकाशं तु न धर्मपदवाच्यमित्याशयः । सास्नादिमत्त्वमिति । अत्रादिशब्देन लाङ्गूलककुदखुरविषाणानि गृह्यन्ते । परीक्षां लक्षयति । लक्षितस्येति । तेनेति । येन कारणेन प्रथमसूत्रे उद्देशमात्रं कृतं लक्षणपरीक्षे त्ववशिष्टे तेन कारणेनेत्यर्थः ।

तत्रापीति । प्रमाणादीनां लक्षणादौ कर्तव्ये ऽपी त्यर्थः । प्रथममित्यादि । मानाधीना मेयसिद्धिरिति(२)न्यायेन प्रमाण

---

(१) तत्त्वे ऽवश्यकर्तव्ये-पा० १ पु० ।

(२) मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणात् ।
तच्चवाऽध्यक्षादिमानेषु गीर्वाणैरप्यवारणम् ॥ इति ।
सम्पूर्णा कारिका विवरणप्रमेयसङ्ग्रहे १ सूचे १ वर्णके ३५ पृष्ठे पुस्त

प्रमाकरणं प्रमाणम् । अत्र च(१)प्रमाणं लक्ष्यं प्रमाकरणं(२) लक्षणम् । ननु प्रमायाः करणं चेत् प्रमाणं तर्हि तस्य फलं वक्तव्यं करणस्य फलवत्त्वनियमात् । सत्यम् । प्रमैव फलं साध्यमित्यर्थः । यथा छिदाकरणस्य परशोश्छि- दैव फलम् । का पुनः प्रमा, यस्याः करणं प्रमाणम् । उच्यते । यथार्थानुभवः प्रमा । यथार्थ इत्ययथार्थानां संशयविपर्ययतर्कज्ञानानां निरासः । अनुभव इति स्मृते-

स्य सकलसाधकत्वेन प्राधान्यात् सूत्रकारेण प्रथममुद्देशे कृते तदनुसारेण प्रथमं तल्लक्षणमुच्यत इत्यर्थः । प्रमाकरणं प्रमा- णमिति । अत्र प्रमाणशब्दः करणव्युत्पन्नः प्रमीयते ऽनेनेति प्रमाणं न तु भावव्युत्पन्नः प्रमितिः प्रमाणमिति तथा सति बोध- स्वभावस्य निर्विकल्पकस्यैव प्रमाणत्वं स्यान्न त्वबोधस्वभा- वस्य चक्षुरादेः इष्यते चोभयत्र तस्मात् करणव्युत्पत्तिरिति । नन्वेवं प्रमाकरणं प्रमाकरणमित्यनन्वयदोषः स्यादिति चेत् । न । प्रमाकरणं प्रमाणपदवाच्यमित्यर्थकरणात् एवं सम्यक्त- मिति । सत्यमिति । सत्यमित्यव्ययमर्द्धाङ्गीकारे । यद्यत् करणं तत्तत् फलवदिति व्याप्यव्यापकपर्यायो नियमोऽङ्गीक्रियते वक्तव्यत्वं नाङ्गीक्रियते फलस्योक्तत्वादित्याशयः । प्रमैव फलमिति । फल् निष्पत्ताविस्यस्य रूपं फलमिति । अत्रानुरूपं दृष्टान्तमाह । यथा छिदेति । छिदा द्वैधीभावः । प्रमां पृच्छति । का पुन- रिति । प्रमा कीदृशीत्यर्थः । उत्तरं वक्तुं प्रतिजानीते । उच्यत

(१) तत्र–पा० २ पु० ।
(२) करणत्वं–पा० १ पु० ।

निरासः। ज्ञातविषयं ज्ञानं स्मृतिः।(१)अनुभवो नाम स्मृतिव्यतिरिक्तं ज्ञानम्। किं पुनः करणम्। साधकतमं करणम्। अतिशयितं साधकं साधकतमं प्रकृष्टं कारणमित्यर्थः। ननु साधकं कारणमिति पर्यायस्तदेव न

---

इति। प्रमां लक्षयति। यथार्थेति। यथार्थश्चासावनुभवश्चेति समासः। यथार्थत्वं तद्वति तत्प्रकारताकत्वं तद्वतीति समम्यर्थ विशेष्यत्वं तथा च तद्वद्विशेष्यताकत्वं तदर्थ इत्यर्थः विशेष्यत्वं भासमानवैशिष्ट्यानुयोगित्वम्। प्रकारत्वं भासमानवैशिष्ट्यप्रतियोगित्वम्। वैशिष्ट्यं सम्बन्धः। प्रतियोगित्वमनुयोगित्वमपि स्वरूपसम्बन्धविशेषः। यथार्थादन्यत्कृत्यमाह। यथार्थेत्यादि। एकस्मिन् धर्मिणि विरुद्धनानार्थावमर्शः संशयः मिथ्याध्यवसायो विपर्ययः व्याप्यारोपे व्यापकारोपस्तर्कः। अनुभवपदस्य व्यावर्त्यमाह। अनुभव इतीति। अनुभवपदार्थमाह। अनुभव इति। अनुभवत्वं जातिरित्यन्ये। प्रमास्वरूपे ऽवगते ऽपि करणस्वरूपं नावगतमिति पृच्छति। किं पुनरिति। पाणिनिसूत्रेणोत्तरयति। साधकतममिति। प्रकृष्टमिति प्रकृष्टत्वं प्रकर्षवत्त्वं फलाव्यवहितपूर्ववर्तिव्यापारवत्त्वमिति यावत्। तदुक्तम्।

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।
विवक्ष्यते यदा यत्र करणत्वं तदा स्मृतम्(२)॥ इति।

इदं च यद्यपि व्यासङ्गदशायां व्यापारे सत्यपि प्रमानुत्पत्ते रिन्द्रियादौ दुर्लभं तथाप्यव्यासङ्गदशाभिप्रायमेतत्। व्यासङ्ग

---

(१) इदं स्मृतिलक्षणं नास्ति १। २ पु०।

(१) इयं कारिका वाक्यपदीये भर्तृहरिणोक्ता। वैयाकरणभूषणे सुवर्थनिरूपणप्रकरणे ऽपीयमुद्धृता।

ज्ञायते किं तत् कारणमिति । उच्यते । यस्य कार्यात् पूर्वभावो नियतोऽनन्यथासिद्धश्च तत् कारणम् । यथा

---

थायां तु विवक्षान्तरं वर्तव्यमिति द्रष्टव्यम् । न च भगवति पुरुषधौरेये लक्षणमिदमव्यापकमिति वाच्यम् । तस्यात्रालक्ष्यत्वात् अन्यान्तरे तु ।

नित्यानित्यतया द्वेधा प्रमा नित्यप्रमाश्रयः ।
प्रमाणमितरस्यास्तु करणस्य प्रमाणता ॥(१)

इत्यादिना ईश्वरस्यापि लक्ष्यत्वमस्तीति ज्ञेयम् । एतेनैव सामग्र्यामतिव्याप्तिरपि परास्ता तस्या निर्व्यापारत्वात् । तथाहि प्रागभावेतरकादाचित्कयावत्कारणप्रागभावानाधारः कार्यप्रागभावाधारः क्षण एव सामग्री । न त्वेकक्षणावच्छिन्नानि यावन्ति कारणानि यागादेश्चिरातीतत्वेन स्वर्गादिसामग्र्यामव्याप्तेः कालोपाध्यव्यापकः कालोपाधिः क्षणः । ननु साधकशब्दार्थं यो न जानाति तं प्रति कारणशब्देनार्थः कथ्यते तच्चासङ्गतं साधकशब्दवत् कारणशब्दस्याप्यज्ञातार्थकत्वादिति हृदि निधाय शङ्कते । नन्विति । कारण लक्षयति । यस्येति । अनन्यथासिद्धश्चेति । प्रकारान्तरेणोपयुक्तो न भवतीत्यर्थः । तेनेति । येन कारणेन रासभादावतिव्याप्तिवारणाय नियतेतिपदं दातव्यं तन्तुरूपादावतिव्याप्तिवारणाय चानन्यथासिद्धमितिपदं तेन कारणेनेत्यर्थः । अनन्यथासिद्धश्चासौ नियतश्चासौ पूर्वभावश्च सोऽस्यास्तीत्यनन्यथासिद्धनियतपूर्वभावि तस्य भावस्तत्त्वमनन्यथासिद्धत्वमन्यथासिद्धत्वाभाववत्त्वम् । अन्यथासिद्धिश्च पञ्चतयी तथाहि अन्यत्र क्लृप्तनियतपूर्ववर्तिन एव कार्यसम्भवे तत्सहभूतान्यथासिद्धत्वमित्येका । अन्यत्र घटान्तरे क्लृप्ता ये नियत-

---

(१) तार्किकरक्षायां प्रमाणप्रकरणे तृतीयकारिका ।

तन्तुवेमादिकं पटस्य कारणम् । यद्यपि पटोत्पत्तौ दैवा-
दागतस्य रासभादेः पूर्वभावो विद्यते तथापि नासौ
नियतः । तन्तुरूपस्य तु नियतः पूर्वभावोऽस्त्येव किं
त्वन्यथासिद्धः पटरूपजननोपक्षीणत्वात् पटं प्रत्यपि कार-
णत्वे कल्पनागौरवप्रसङ्गात् । तेनानन्यथासिद्धनियतपूर्व-

---

पूर्ववर्तिनश्चक्रादयस्तैरेव तद्घटजनने चक्रादिसहभूतत्वं रास[भ]
स्यान्यथासिद्धत्वमित्यक्षरार्थः । इदं च यत्र घटे नियतपूर्वव[र्ति]
रासभस्तद्घटत्वेन कार्यत्वे रासभत्वेन कारणत्वे ऽङ्गीक्रियमा[णे]
इति द्रष्टव्यम् । अन्यं प्रति पूर्ववर्तित्वे गृहीत एव यत्रान्यं प्र[ति]
पूर्ववर्तिता गृह्यते तदन्यथासिद्धमित्यन्यथा । अन्यं शब्दं प्रति
पूर्ववर्तित्वे गृहीत एव यत्राकाशे ऽन्यं घटादिकं प्रति पूर्ववर्तिता
गृह्यते तदाकाशमन्यथासिद्धमित्यक्षरार्थः । इदं च शब्दकारणत्वस्व-
रूपेणाकाशत्वेन घटादिकं प्रति कारणत्वे स्वीक्रियमाणे शब्द-
कारणत्वस्य पूर्ववर्तिताघटितत्वया शब्दं प्रति पूर्ववर्तित्वे
गृहीत एव घटादिकं प्रति पूर्ववर्तित्वग्रहात् सर्वं सुयोजं
भवतीति ज्ञेयम् । अत्र शब्दं प्रति शब्दकारणत्वेनाकाशस्य
कारणतायामात्माश्रय इत्यष्टद्रव्यातिरिक्तद्रव्यत्वेन वाच्या
तथा च तेनैव रूपेण घटादिकं प्रत्यपि भवत्वविशेषा-
दिति यश्चोदयेत् तं प्रत्येवं ब्रूयाद् यदन्यत्र क्लृप्तनियतेत्यत्रा-
न्तर्भाव एतस्या इति । यं पुरस्कृत्य यस्य पूर्ववर्तित्वं गृह्यते तत्
तेनान्यथासिद्धमित्यपरा । यं तन्तुं पुरस्कृत्य यस्य तन्तुरूपस्य
पूर्ववर्तिता गृह्यते तत् तन्तुरूपं तेन तन्तुनान्यथासिद्धमित्य[क्ष]
रार्थः । यमादायैव यस्य पूर्ववर्तित्वं गृह्यते तदन्यथासिद्धमि[ति]
यं दण्डत्वलक्षणं धर्ममादायैव यस्य दण्डस्य पूर्ववर्तित्वं [गृह्यते]
तद् दण्डत्वमर्थाद् दण्डेनान्यथासिद्धमित्यक्षरार्थः । अन[...]

भावित्वं कारणत्वम्। अनन्यथासिद्धनियतपश्चाद्भावित्वं। कार्यत्वम्। यत्तु कश्चिदाह। कार्यानुकृतान्वयव्यतिरेकि कारणमिति। तद(१)युक्तम्। नित्यविभूनां व्योमादीनां कालतो देशतश्च व्यतिरेकासम्भवेनाकारणत्वप्रसङ्गात्। तच्च कारणं त्रिविधम्। समवाय्यसमवायिनिमित्तभेदात्। तत्र यत्समवेतं कार्यमुत्पद्यते तत् समवायिकारणम्। यथा

---

पूर्ववर्तित्वे गृहीत एव यत्र जन्यं प्रति पूर्ववर्तित्वं गृह्यते तदन्यथासिद्धमिति चरमा। कुलालपितुः कुलालपितृत्वेन घटं प्रति कारणत्वे वाच्ये घटजनककुलालं प्रति पूर्ववर्तित्वे गृहीत एव जन्यं घटं प्रति पूर्ववर्तित्वग्रहात् कुलालपिता अन्यथासिद्ध इत्यक्षरार्थः। कुलालत्वेन रूपेण तु सोऽपि कारणमेवेति शास्त्ररहस्यम्। कारणता च द्विविधा फलोपधानलक्षणा स्वरूपयोग्यत्वलक्षणा च। तत्राद्या फलोपधायके द्वितीया तु सहकारिविरहप्रयुक्तकार्याभाववत्वादिरूपा फलानुपधायकेऽपीति विवेकः। यस्य कार्यात् पूर्वभावो नियत इति कारणलक्षणेऽवधित्वेन प्रविष्टस्य कार्यस्य ज्ञानार्थं तल्लक्षणमाह। अनन्यथासिद्धेति। पश्चाद्भावित्वमात्रं दैववशात् पश्चाद्भाविनि रासभादौ गतमत उक्तं नियतेति। तावत्यपि तन्त्वपेक्षया नियतपश्चाद्भाविनि पटरूपे गतमत उक्तमनन्यथेति। परोक्तं कारणलक्षणं दूषयितुमुपन्यस्यति। यत्त्विति। कार्येति। कार्येणानुकृतावनुविहितावन्वयव्यतिरेकौ यस्येति कार्यानुकृतान्वयव्यतिरेकि घटलक्षणं कार्यं हि कपाललक्षणकारणान्वयव्यतिरेकावनुविधत्ते तस्मिन् सति सत्त्वमन्वयः तस्मिन्नसति तदसत्त्वं व्यतिरेकः। दूषयति। तदयुक्तमिति। यत्त्वयोक्तमिति शेषः। नित्य-

---

तन्तवः पटस्य समवायिकारणम् । यतस्तन्तुष्वेव पटः समवेतो जायते न तुर्यादिषु । ननु तन्तुसम्बन्ध इव तुर्यादिसम्बन्धोऽपि पटस्य विद्यते तत् कथं तन्तुष्वेव पटः समवेतो जायते न तुर्यादिषु । सत्यम् । द्विविधः सम्बन्धः संयोगः समवायश्चेति । तत्रायुतसिद्धयोः सम्बन्धः समवायः । अन्ययोस्तु संयोग एव । कौ पुनरयुतसिद्धौ । ययोर्मध्ये एकमविनश्यदपराश्रितमेवावतिष्ठते तावयुतसिद्धौ । तदुक्तम् ।

तावेवायुतसिद्धौ द्वौ विज्ञातव्यौ ययोर्द्वयोः ।
अनश्यदेकमपराश्रितमेवावतिष्ठते ॥

यथा अवयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ

---

विभूनामिति । नित्यत्वं कालिकव्यतिरेकाभावे हेतुः । विभुत्वं च दैशिकव्यतिरेकाभावे हेतुरित्याकलनीयम् । कारणं विभजते । तत्रेति । समवायिकारणं लक्षयति । तत्र यत्समवेतमिति । तत्र तेषु कारणेषु यत्समवेतं यस्मिन् समवेतमित्यर्थः भट्टाङ्गीकारेण परिहरति । सत्यमिति । तदेव स्पष्टयति । द्विविधः सम्बन्ध इत्यादि । सम्बन्धलक्षणं तु मूलकार एवाग्रे वदिष्यति सम्बन्धो हीत्यादिना । सम्बद्धत्वं समानमङ्गीक्रियते न तु समानेन सम्बन्धेन सम्बद्धत्वमिद्दाङ्गीकार इत्याशयः । अन्ययोस्त्विति । अन्ययोः युतसिद्धयोः पृथक्सिद्धयोरिति यावत् । यु मिश्रणामिश्रणयोरित्यस्य धातोरयुतसिद्धेत्यादिशब्दे कर्तरोऽर्थो विवक्षित इत्याशये पृच्छति । कौ पुनरिति । अमिश्रणार्थत्वमत्र विवक्षितमित्याह ययोरिति । अयुतसिद्धयुग्मान्युदाहृत्य दर्शयति । यथेति अवयव्यादयो हीत्यादि । अत्रादिपदाद् गुणक्रियाजाति

जातिव्यक्ती विशेषनित्यद्रव्ये चेति । अवयव्यादयो हि यथाक्रममवयवाद्याश्रिता एवावतिष्ठन्ते ऽविनश्यन्तः । विनश्यदवस्थास्त्वनाश्रिता एवावतिष्ठन्ते ऽवयव्यादयः(१) । यथा तन्तुनाशे सति पटः । यथा वा(२) आश्रयनाशे सति गुणः । विनश्यत्ता तु विनाशकारणसामग्रीसान्निध्यम् । तन्तुपटावप्यवयवावयविनौ तेन तयोः सम्बन्धः

---

आद्याः । अवयवाद्याश्रिता इत्यत्र तु गुणिक्रियावद्व्यक्तिनित्यद्रव्याणि ग्राह्याणि । विनश्यदवस्थास्त्विति । विनश्यन्ती अवस्था येषां ते तथोक्ताः । अनाश्रिता एवेति क्षणमात्रमिति शेषः । उदाहरति । यथेत्यादि । यत्र समवायिकारणनाशाद्द्रव्यनाश इत्यर्थः । यथा वा आश्रयेत्यादि । गुणस्य समवायासमवायिनिमित्तकारणविनाशविरोधिगुणेभ्यो नाश इति स्थितौ यत्र समवायिकारणनाशाद् गुणनाश इत्यर्थः । विनश्यत्तेत्यादि । विनश्यतो भावः विनश्यत्ता विनाशे ध्वंसे यानि कारणानि तेषां सामग्रीसाकल्यम् । न तु सकलकारणसमवधानमत्र सामग्री तथात्वे कारणपदसान्निध्यपदयोर्वैयर्थ्यं स्यात् । साकल्यस्य सन्निधिरेव सान्निध्यं चातुर्वर्ण्यमितिवत् स्वार्थे प्रत्ययः । एवं मृत्पिण्डोऽपीति । समवायिकारणलक्षणाक्रान्तत्वान्मृत्पिण्डोऽपि घटं प्रति समवायिकारणमित्यर्थः । समानकालोत्पत्ताविति । गुणगुणिनोः समानकालोत्पत्तावुच्यमानायां समानसामग्रीकत्वात् समानसमवायिकारणकत्वात् कपालरूपघटरूपयोः भेदो न स्यादिति योजना । अयमर्थः । गुणगुणि-

---

(१) अवयव्यादयः-इति नास्ति २ । ३ पु० ।

(२) अथवा--पा० २ पु० ।

समवायोऽयुतसिद्धत्वात् । तुरीपटयोस्तु न समवायोऽयुतसिद्धत्वाभावात् । न हि तुरी पटाश्रितैवावतिष्ठते नापि पटस्तुर्याश्रितोऽतस्तयो सम्बन्धः संयोग एव । तदेवं तन्तुसमवेतः पटः । यत्समवेतं कार्यमुत्पद्यते तत् समवायिकारणमस्तन्तुरेव समवायिकारणं पटस्य न तु तुर्यादि । पटश्च स्वगतरूपादेः समवायिकारणम् । एवं मृत्पिण्डोऽपि घटस्य समवायिकारणं घटश्च स्वगतरूपादेः समवायिकारणम् । ननु यदैव घटादयो जायन्ते तदैव तद्गतरूपादयोऽपि अतः समानकालीनत्वाद् गुणगुणिनोः सव्येतरविषाणवत् कार्यकारणभाव एव नास्ति पौर्वापर्याभावादतो न समवायिकारणं घटादयः स्वगतरूपादीनां कारणविशेषत्वात् समवायिकारणस्य । अत्रोच्यते । न गुणगुणिनोः समानकालीनं जन्म किं तु द्रव्यं निर्गुणमेव प्रथममुत्पद्यते पश्चात् तत्समवेता गुणा उत्पद्यन्ते । समानकालोत्पत्तौ तु गुणगुणिनोः समानसामग्रीकत्वाद् भेदो न स्यात् कारणभेदनियतत्वात् कार्यभेदस्य । तस्मात् प्रथमे क्षणे निर्गुण एव घट उत्पद्यते गुणेभ्यः पूर्वभावीति भवति गुणानां समवायिकारणम् । तदा कारणभेदोऽप्यस्ति घटो हि घटं प्रति न कारणमेकस्यैव पौर्वापर्याभा-

---

नोः समानकालोत्पत्तौ यद्गुणिनो घटस्य समवायिकारणं तदेव रूपादेर्गुणस्य वाच्यं न तु गुणी घटः तस्य पौर्वापर्याभावादेवं कपालरूपस्य घटरूपस्य च कपालमेव समवायिकारणं विवक्षि तथा चानयोः समानसमवायिकत्वाद् भेदो न स्यादेकदा रूप समवायिकारणभेदस्य प्रयोजकत्वादिति । ननु सामग्री

वात् । न हि स एव तमेव प्रति पूर्वभावी पश्चाद्भावी चेति । स्वगुणान् प्रति तु पूर्वभावित्वाद्भवति गुणानां समवायिकारणम् । नन्वेवं सति प्रथमे क्षणे घटोऽचाक्षुषः स्यादरूपिद्रव्यत्वाद् वायुवत् तदेव हि द्रव्यं चाक्षुषं यन्म-

---

यथाश्रुत एवास्त्विति चेत् । न । गुणगुणिनोः समानकालोत्पत्तिकत्वे ऽपि तत्प्रागभावादिभेदकृतः सामग्रीभेदो भविष्यति तथा च गुणगुणिनोः समानकालोत्पत्तिकत्वं न सामानसामग्रीकत्वे प्रयोजकं समानसमवायिकारणकत्वे तु तत् प्रयोजकमेवेत्युक्तं प्राक् । कारणभेदेति । समवायिकारणभेदेत्यर्थः कार्यभेदस्येति । रूपलक्षणकार्यभेदस्येत्यर्थः । कारणभेदोऽपीति । घटरूपकपाल-रूपयोरित्यर्थः । ननु कपालरूपस्य कपालरूपमेव समवायिकारणं घटरूपस्य घटरूपमेव तथा च समवायिकारणभेदो वरीवर्त्तीत्यत आह । घटो हीत्यादि । यथात्राभेदे कार्यकारणभावो नास्ति एवं कपालरूपस्यापि न कपालरूपं कारणमभेदादेवेत्याशयः । नन्वेवंसतीति । घटस्य निर्गुणत्वे सतीत्यर्थः अचाक्षुषः स्यादिति । चक्षुर्जन्यज्ञानविषयो न स्यादित्यर्थः । अरूपिद्र-व्यत्वादिति । द्रव्यत्वादित्युक्ते घटादौ व्यभिचारोऽत उक्तम-रूपीति । अरूपित्वादित्युक्ते रूपादौ व्यभिचारोऽत उक्तं द्रव्य-त्वादिति । अत्र दृष्टान्तमाह । वायुवदिति । द्रव्यचाक्षुषत्वे प्रयोजकमाह । तदेव हीति । उद्भूतरूपवत्त्वमात्रं यद्युच्येत तदा परमाणुद्व्यणुकयोश्चाक्षुषत्वं स्यादत उक्तं महत्त्वे सतीति । एताव-न्मात्रोक्तौ तु व्योमादेश्चाक्षुषत्वं स्यादत उद्भूतरूपवदिति । त्त्वे सति रूपवत्त्वमित्युक्ते तप्तवारिस्थवह्नेश्चाक्षुषत्वं स्या- उद्भूतेति । घटस्य निर्गुणत्वे ऽचाक्षुषत्वं दोषमुक्त्वा दोषा- ाह । अद्रव्यं चेति । अचाक्षुषत्वमद्रव्यत्वं चेति दोषद्वयं

हस्वे सत्युद्भूतरूपवत् । अद्रव्यं च स्याद् गुणाश्रयत्वाभा-
वाद् गुणाश्रयो द्रव्यमिति हि द्रव्यलक्षणम् । सत्यम् । प्रथमे
क्षणे घटो यदि(१) चक्षुषा न गृह्यते तदा का नो हानिः ।
न हि सगुणोत्पत्तिपक्षेऽपि निमेषावसरे घटो गृह्यते ।
तेन व्यवस्थितमेतन्निर्गुण एव प्रथमं घट उत्पद्यते
द्वितीयादिक्षणेषु(२) चक्षुषा गृह्यते, न च प्रथमे क्षणे गुणा-
श्रयत्वाभावादद्रव्यत्वापत्तिः समवायिकारणमितिद्रव्य
द्रव्यलक्षणयोगाद् योग्यतया गुणाश्रयत्वाच्च ( योग्यता च
गुणात्यन्ताभावाभावः )(३) । असमवायिकारणं तदुच्यते ।

भवतोक्तं तत्राद्यो दोष एव न भवतीत्याशयेन परिहरति । सत्य
मिति । आशयं विवृणोति । प्रथमे क्षण इति । द्वितीयादिक्ष-
णेष्विति । ननु द्वितीयक्षणे घटे रूपोत्पत्तावपि चक्षुषा
ग्रहणं न स्यात् तत्र रूपस्यापि कारणत्वात् कारणं च पूर्ववृत्त्य-
पेक्षितमित्याक्षेपे द्वितीयादीत्यत्रातद्गुणसंविज्ञानबहुव्रीहिणा तृती-
यादिक्षणो गृह्यत इति समाधानं ज्ञेयम् । गुणाश्रयत्वं त्विव-
ति(४) । गुणाश्रयत्वयोग्यतावच्छेदकं त्वित्यर्थः । तत्र गुणप्रागभा-
वसत्त्वेन तदत्यन्ताभावासत्त्वादित्यर्थः । असमवायिकारणं लक्ष-
यति । यत् समवायीति । समवायिकारणप्रत्यासन्नं समवायि-
कारणसमवेतम् । अवधृतं निश्चितं सामर्थ्यं कारणत्वं यस्य
तदवधृतसामर्थ्यम् । समवायिकारणप्रत्यासन्नमसमवायिकारण-
मित्युक्ते तन्तुरूपादावतिव्याप्तमत उक्तमवधृतेत्यादि । तावत्युक्ते
तन्त्वादौ गतमत उक्तं समवायिकारणेत्यादि तत्समवायिकार

(१) परमसूक्ष्मो यदि घटादिः–पा० २ । ३ पु० ।
(२) क्षणे तु–पा० २ । ३ पु० ।

(३) ( ) एतच्चिह्नमध्यस्थः पाठो नास्ति १ । २ पुस्तकयोः ।
(४) अयं पाठः चतुर्षु मूलपुस्तकेषु न दृश्यते ।

